जित्वा च सकलाँल्लोकान् सुरानिन्द्रपुरोगमान्।
दिक्पालान्वसुपालांश्च तिरस्कृत्याऽसुराधिपः ॥ ६ ॥
सर्वांश्चसर्वकामेभ्यः स्वयमेवाधितिष्ठति। स्वर्गान्निराकृताः सर्वतेनदेवगणाभुवि
विचरन्तियथामर्त्या भ्रष्टराज्याःपराजिताः। अलब्धशरणाःसर्वेब्रह्माणंशरणंययुः ॥
तत्रगत्वानमस्कृत्यादैत्यकृत्यंन्यवेदयन्। भगवन्!किमिदंकार्यंभवतापरमेष्ठिना ॥ ६
येनदेवगणाःसर्वेनष्टप्रायाश्चतत्क्षणात् । हिरण्याक्षेणदैत्येन हृतंस्वर्गमकण्टकम् ॥
यज्ञभागाश्चयेसर्वे उपाश्नातिपृथक्पृथक्। केनोपायेनजीवामः कथंतिष्ठामभूतले ॥
इतिविक्लवितंश्रुत्वा देवानांसपितामहः। उवाचवचनंरम्यं तत्कालेसमयोचितम्

ब्रह्मोवाच

शृण्वन्तुभोसुरश्रेष्ठा!यूयंसर्वेसमाहिताः । पुराऽयंपार्षदश्रेष्ठोद्वारपालः समाहितः ॥
वैकुण्ठभवनेरम्ये विष्णोरतुलतेजसः। जयोनाममहाबाहुर्विजयेन च संयुतः ॥ १४
द्वावेवसचिवौदान्तौ विष्णुवेषधरावुभौ। आत्तशस्त्रौचविक्रान्तौ तिष्ठतोद्वारिसर्वदा
एकदावैमुनिश्रेष्ठ ब्रह्मणोमानसात्मजाः। स्वैरंचरन्तोलोकेषु विष्णोर्भवनमागताः
सनकाद्यो महाभागा विष्णुदर्शनलालसाः।
ताभ्यां निवारिताः सर्वे प्रपेतुर्धरणीतले ॥ १७ ॥
मुमुहुश्चतदाव्यास कुमाराभृशदुःखिताः। ततोऽगात्समहाबाहुर्भगवान्कमलेक्षणः ॥
ददर्शसहसाविष्णुःकुमारान्भुविदुःखितान्। उत्थाप्यैकंसमारोप्यसुस्वजेमधुसूदनः
मूर्ध्निचाघ्रायबाहुभ्यां परिष्वज्य उवाचह।
कस्माद्वःकश्मलमिदं केनापि दुःखिताभृशम् ॥ २० ॥
सर्वं तत्कारणं बाला ब्रूत नो धर्मवित्तमाः! ।

कुमारा ऊचुः

श्रूयताम्भोमहाराज! अस्माकं दुःखमीदृशम् ॥ २१ ॥
येनप्रासादयंब्रह्मन् दशामेतांःसुसुव्रत । आयाताभ्रातरोह्येते चत्वारोलोकविश्रुताः ॥
दर्शनार्थंरमानाथसाभिलाषाःसुरार्दिताः । निवारिताश्चसहसा द्वारपालैर्बलोत्कटैः

तेन चेयं दशा प्राप्ता मयता परिपालिता ।
अतःप्रभृति स्थानेऽस्मिन् स्थितिर्नास्ति च शाश्वती ॥ २४ ॥
एतस्मादासुरीं योनिं प्राप्नुतां सुसमाहितौ ।
सच शप्तौ तदा व्यासौ आसुरीं योनिमुत्सिताम् ॥ २५ ॥
जयश्चविजयश्चैव कृष्णाय समाश्रितौ । जन्मान्तरसहस्रेण तपोदानसमाधिभि
र्नराणांक्षीणपापानां कृष्णेभक्ति प्रजायते । कृष्णायेनचैवसद्यो जन्मभिर्जायतेत्रिभि
र्भविष्यति [redacted] यां तस्माद्विष्णुभक्ति परा स्मृता ।
जन्मजन्मान्तरे जातौ तामसीं योनिमुद्धतौ ॥ २८ ॥
हिरण्यकशिपुश्चैवहिरण्याक्षोमहाबल । तथैवकुम्भकर्णश्चरावणोलोकरावण ॥
दन्तवक्त्रःशिशुपालश्चजन्मत्रयेस्मृता । योऽसौमहाबलोदैत्योहिरण्याक्षइतिस्मृत
कृष्णायसमापन्नो देवब्राह्मणनिन्दक । जित्वाचसकलान्देवान्स्वयमेवाधितिष्ठति
स्वर्गाभिराहृता सर्वे सुरराज्या पराजिता ।
विचरन्ति यथामर्त्यास्तेन देवगणा भुवि ॥ ३२ ॥
स्वधाकारोवषट्कार स्वाहाकारोनदृश्यते । देवपूजार्चननास्तिब्राह्मणनामविरोधत
नैवतापानिचशान्तपुण्यान्यायतनानिच । आश्रमेषुचसर्वेषु ऋषीणांचमहात्मनाम्
अत्यद्भुतप्रकुर्वन्ति दुर्दैत्या प्रहारिण । वर्णाश्रमवताधर्मा क्षीणाश्चैवसुशीलता
उद्विग्ना हि तदा जाता तस्मिन् राज्ञि दुरात्मनि ।
दुराचारा दुरात्मानो मायिनो बहुमानिन ॥ ३° ॥
पाखण्डिनोविकर्मिण स्वधर्मबहिर्मुखा । पशुधर्मगता ह्येते सर्वत्रलेविशासिन ॥
बहुम्लेच्छा बहुक्लेशा बहुबाधाचनिष्ठता ।
कोवेद कास्मृति पुण्या कोयज्ञ का च दक्षिणा ॥ ३८ ॥
तमोभूतंजगत्सर्वं दृश्यतेवसुधातले । एवव्यासंयदाजात कृष्णसर्वंजगत्त्रयम् ॥ ३९
यदायदाहिधर्मस्य ग्लानिर्भवतिभारत । अभ्युत्थानमधर्मस्य तदात्मानंसृजाम्यहम्
इतिज्ञात्वामहाविष्णुर्वाराहवपुरास्मवान् । दधारलीलयादिव्य श्वेतद्वीपोपमशुभम्

यूपदंष्ट्रो हविर्गन्धो बीजौषधितनूरुहः ।
वेदपादः स्मृतिर्घोणा जिह्वाग्निस्तालु चाहुतिः ॥ ४२ ॥
अन्तरास्यरुचाटोपोयज्ञकायःसुदक्षिणः । उद्गमोघुघुरोनादोविहारोऋत्विजाकृतिः
श्वेतः श्वासपरोदक्षः सदस्यावयवःस्मृतः । पुच्छःकर्मासनोनित्यंयजतांवहुमानदः
वेदापल्वलसंतारो ब्रह्माध्वर्यूर्वनाकरे । लोककल्पोलोकसाक्षी परावरवहः शुचिः
आद्यःपुरुषईशानः पुरुहूतःपुरुष्टुतः । तेनासौनिहतोदैत्यो हिरण्याक्षोदुरासदः ॥
सङ्ग्रामान् सुबहून् कृत्वा बहुकष्टेन विष्णुना ।
दैत्येन पीडिता पृथ्वी रसातलतलं गता ॥ ४७ ॥
उद्धृताचवराहेणदंष्ट्रयाचन्द्ररेखया । हतास्तेदानवाः सर्वेशेषाः पातालमाययुः ॥
ववुः पुण्यास्तदा वाताः सुप्रभोऽभूद्दिवाकरः ।
जज्वलुश्चाग्नयः शान्ताः शान्तादिग्जनितस्वनाः ॥ ४६ ॥
सरितोमार्गवाहिन्यः सागराः प्रकृतिगताः । दृष्ट्वादेवोऽखिलं व्यासप्रसन्नात्माबभूवह
वाराहमूर्त्तिर्भगवान् सर्वकामफलप्रदः । आनन्दनिर्भरोदेवो हतदैत्यो वरप्रदः ॥ ५१
तस्यापि हृदयाज्जातानदीह्येषासनातनी । आनन्दजलसम्पूर्णा सर्वानन्दवरप्रदा ॥
बहुयोजनविस्तारा बहुला कामचारिणी ।
पद्माकरसमाकीर्णा हंसकारण्डवाकुला ॥ ५३ ॥
सरलातरलामाया यक्षगन्धर्वसेविता । किन्नरीभिर्गीयमाना गीयमानाखगालिभिः ॥
नृत्यन्त्यप्सरसो नित्यं स्तूयमाना महर्षिभिः ।
हुताग्निभिर्युता नित्यं राजर्षिभिःसमाश्रिता ॥ ५५ ॥
तुङ्गस्तनभराक्रान्तवरस्त्रीभिः समावृता । क्वचित्करिवरान्दोलै रम्यमाणाविराजिता
वेदविद्भिर्द्विजैःसेव्या ऋषिभिश्शंसितात्मभिः ।
सर्वदा सर्वकाले च ऋद्धिसिद्धिप्रदा नृणाम् ॥ ५७ ॥
महाकालपुरेरम्ये रम्यापद्मावतीपुरी । सुन्दरंकुण्डमपरंव्यास रम्यंप्राचीनकंशुभम्
यत्रस्नात्वानरायान्ति शिवलोकंसनातनम् । तत्रलीनापराव्यास क्षिप्रावैलोकपावनी

धाराहेणहृतंसर्वं दुष्टदैत्यनिबर्हणम् । तेनदेवा निरातङ्का कृता वाराहमूर्तिना ॥
भूत्वाप्राञ्जल्य सर्वे देवाइन्द्रपुरोगमा । स्तुतिं महाविष्णुं सन्नता पुरत स्थिता ॥

देवा ऊचु

देवदेवजगन्नाथ पुण्यश्रवणकीर्तन। किं दानं किं तप पुण्यं किं तीर्थंकात्र देवता ॥
येन पुण्यप्रभावेन पुन स्वर्गोऽधिवाप्यते । एवनिश्चित्यनोब्रूहि सर्वंगुह्यनर विभो ॥

श्रीवाराह उवाच

श्रूयतांभोसुरा सर्वे युष्माकसिद्धिकारणम् । गुह्याद्गुह्यतरपुण्यमहाकालवनेशुभम्
ममदेहोद्भवाक्षिप्रा यत्रलीना पयस्विनी । नीलगङ्गासरिच्छ्रेष्ठा यत्रप्राची सरस्वती
पुष्करञ्च गयातीर्थं पुरुषोत्तमसर शुभम् । तत्त्वयगच्छतक्षिप्रा पुनर्लोकानवाप्स्यथ
इति श्रुत्वापरवाक्य देवदेवजगद्गुरो । तत्रदेवगणा सर्वे ब्रह्मेन्द्रपुरोगमा ॥
महाकालवनेरम्ये यत्रक्षिप्रासरिद्वरा । स्नानदानादिक कृत्वा श्राद्धकृत्वायथोचितम्

तेन पुण्यप्रभावेण स्वकाँल्लोकान् गता सुरा ।
एव व्यास समाख्याता क्षिप्रा वै लोकपावनी ॥ ६१ ॥

आतसरोवराहस्य विष्णोरतुलतेजस । यस्यदर्शनमात्रेण ब्रह्महत्या व्यपोह्यते ॥
तत्र स्नात्वा पय पीत्वा श्राद्ध कृत्वा यथोचितम् ।
पयस्विनीं च गा दत्वा विष्णुलोके महीयते ॥ ७१ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डे
ऽवन्तीक्षेत्रमाहात्म्ये क्षिप्रामाहात्म्य नाम त्रिषष्टितमोऽध्याय ॥ ६३ ॥

---

# चतुःषष्टितमोऽध्यायः

## सुन्दरकुण्डपिशाचमोचनतीर्थवर्णनम्

सनत्कुमार उवाच

पृथिव्यां यानि तीर्थानि तानि सर्वाणि सुव्रत! ।
अवन्त्यां सुन्दरे तीर्थे तिष्ठन्ति सर्वदा भुवि ॥ १ ॥

व्यास उवाच

किमिदंसुन्दरंकुण्डंकदाकालेऽभवत्क्षितौ । निर्मितंकेनकोदेवःकिंवातस्यफलंस्मृतम्

सनत्कुमार उवाच

शृणुपुण्यतमेक्षेत्रे सुन्दराख्यं यथाभवत् । सर्वपापप्रशमनं वाञ्छितार्थफलप्रदम्॥
यस्य श्रवणमात्रेण ब्रह्महत्या व्यपोह्यते । अश्वमेधाधिकंपुण्यं वाजपेयशताधिकम्
पुराकल्पक्षये व्यास! नष्टकल्पा च मेदिनी । प्रचण्डवातवर्षाभ्यां घूर्णितोमेरुपर्वतः
तदात्रपतितंव्यास!वैकुण्ठशिखरोत्तमम् । महाकालवने घोरे गुह्येचैवाव्यये भुवे ॥
तत्क्षणात्पतिते शृङ्गे कुण्डं जातं सुनिश्चितम् ।
रत्नसोपानसुस्वच्छं मुक्तासंकनपूरितम् ॥ ७ ॥
जाम्बूनदकृतरोहं हेमपद्मविराजितम् । कल्पद्रुमकृतच्छायं चिन्तामणिसमुच्छ्रितम्
हंसकारण्डवाकीर्णं महर्षिगणसेवितम् । वीजौषधिगणाकीर्णं सर्वतत्त्वाभिसंयुतम्
कल्पक्षयेनक्षीयन्ते यानितत्त्वानिसर्वदा । तानि तत्र प्रतिष्ठन्ति मूर्त्तिमन्तिपराणिच
वेदशास्त्रपुराणानि गाथा गीत्यक्षराः स्वराः ।
ॐकारश्च वषट्कारः गायत्री त्रिपदीपरा ॥ ११ ॥
कलाकाष्ठामुहूर्तानि लवत्रुटिपलं घटिः । अहर्निशश्चयामाश्चपक्षौमासौऋतुस्तथा
संवत्सरोयुगश्चैवकुण्डेतिष्ठन्तिमूर्तितः । देवायक्षाश्चनागाश्च गुह्यकाःकिन्नरास्तथा
गन्धर्वाप्सरसोयक्षाःसिद्धाःकिंपुरुषास्तथा । उपासाञ्चक्रिरेतस्यकल्पदोषभयातुराः

ब्रह्मा रुद्रश्च कालश्च लोकपाला महौजस ।
केचिद् ध्यानपरा सिद्धास्तापसा शंसितव्रता ॥ १५ ॥
तिष्ठन्तिबहुयुगव्यास यावत्कल्प समाप्यते । सुदर्शनसमाकार पूरितवामृताम्बुभि
दिव्याभिप्रायसयुक्त पारिजातगुणान्वितम् ।
दिव्यस्त्रीस्नानगन्धोद्दैर्वासित तु सदैव हि ( वासितोद्गारिसौरभम् )
क्वचिन्मयूरा नृत्यन्ति क्वचित् कूजन्ति कोकिला ।
क्वचिच्च केकाभिरवा क्वचिद्बुधोप समाकुलम् ॥ १८ ॥
सुन्दर सुन्दराकारं सुन्दरं तत्तथोच्यते । यत्पुण्यकर व्यास! सर्वपापहरंपरम् ॥
यत्रसन्निहितोविष्णु शिव शक्तयायुतोवशी । उपास्यात्र मिरेशश्च सर्वकालेषुसर्वदा
क्षणार्द्धंक्षणमेकच सुन्दरकुण्डे नरोवसेत् । वैकुण्ठे नियतवास यावत्कल्पशतभवेत्
पतङ्गा पक्षिण कीटा मृगा यान्ति शिवालयम् ।
किं पुनर्मानवा लोके स्नानपूतास्तु तज्जले ॥ २२ ॥
योदद्यातिलान्धेनु गजवाजिरथावनाम । दासीदासंसुवर्णंच रत्नानिविविधानिच
शय्याद्यानविमानानिदानानिविविधानिच । ततस्यदानजवैविकीद्धव्यासफलभवेत्
भूय शृणुवर व्यास सुन्दरकुण्डफलस्मृतम् । एकदाबहुपापेन पतित पापयोनिषु
पिशाचोमोक्षमापन्न शिवरूपधरोगत । पिशाचमोचनेस्नात्वा दृष्ट्वा देव महेश्वरम्
मुच्यते सर्वपापेभ्यो यद्यपि ब्रह्महा भवेत् ।

व्यास उवाच

क पिशाच इति ख्यात किं तेन दुष्कृत कृतम् ॥ २३ ॥
येन पापप्रसङ्गेन पिशाचत्व समागत । कथतीर्थे प्रसङ्गोऽस्य जातोवै द्विजसत्तम!
एतद्वेदितुमिच्छामि त्वत्तो ब्रह्मविदाम्वर! ।

सनत्कुमार उवाच

शृणु व्यास! महाख्यान तीर्थमाहात्म्यमुत्तमम् ॥ २६ ॥
यस्यश्रवणमात्रेण सर्वपापक्षयोभवेत् । ब्राह्मणो देवलोनाम दाक्षिणात्योद्विजाधम

सदापापरतोलोभी कूटसाक्षीचलम्पटः। गुरुद्रोहीकितवोधूर्तो भ्रूणहागुरुतल्पगः॥
हेमहारी सुरापीच ब्रह्महास्वामिद्रोहकः। अभक्ष्यभक्षकश्चैव वेदशास्त्रविवर्जितः॥
बहुजन्मार्जितपापी सर्वधर्मबहिष्कृतः। विश्वासघातकोमानी चोरसङ्गरतः खलः॥
देशान्तरगतोमन्दश्चौरकार्यार्थसाधकः। बहवो निहतामार्गे पापचारेण जन्तुना॥
मगधेषु गतो दुष्टः प्रसङ्गात्पापकारिणाम्। तत्रैको ब्राह्मणोदान्तो वेदवेदाङ्गपारगः

साग्निकः शुद्धसत्त्वस्थो ब्रह्मकर्मरतः सदा।
श्वशुरगृहस्थितां भार्यां तामादाय यशस्विनीम्॥ ३६॥

चलितोमार्गमारुद्ध्य तेनपापेनघातितः। तस्यस्त्रीच वरारोहा रूपलावण्यशालिनी
पतिव्रता महाभागा पूतचित्ताशुचिस्मिता। हतेभर्तरिदुःखार्ता पत्युर्विरहकातरा
वनेघोरे परिभ्रष्टा काष्ठमादाय भामिनी। आरुरोहचितांदीप्तां पतिनाशुद्धमानसा
सचदुष्टतरःसर्वं तस्य विप्रस्यजीवनम्। गृहीत्वा चलितोमार्गेगृहीतोराजकिङ्करैः

निगडित्वा तु वित्तेन वेदितो राजसन्निधौ।
घातितो वै गले बद्ध्वा रज्जुना वृक्षकोटरे॥ ४१॥

चाण्डालैर्घृष्टितोभूमावितश्चेतः श्वपाकिभिः। तेनकर्मविपाकेन रौरवंनरकंगतः॥
षष्टिवर्षसहस्राणिविष्ठायांकृमितांगतः। ततो हि नरकं प्राप्तोयमशासनकारकैः॥

कुम्भीपाकगतो रौति वैतरण्यां प्रपीडितः।
एवं बहुविधान्नरकान्भुक्त्वा पापी स दुःखतः (नवान्नवान्)॥ ४४॥

ततःप्रेतत्वमापन्नो युगानांपञ्चसप्ततिम्। सूचीमुखोमहाकायो महारावोमहोदरः॥
क्षुधातृषापराक्रान्तो मरुदेशसमाश्रितः। ततःकष्टतरंप्राप्यपैशाचींतनुमाश्रितः॥
कुटिलोदुष्टभावश्च दुष्टाचारीदिगम्बरः। विष्ठामूत्रकृताहारो पूतिपर्युष्टभोजनः॥
श्मशानेचितिभोजीच कृत्तिवासाविलोचनः। भग्नवाप्यांतडागेच्चशुष्कवृक्षेचनिर्जले
प्राकारपरिखाकारे शून्यागारेनदीतटे। निवासोरोचतेतस्य सर्वदासर्वसन्धिषु॥
एवं बहुयुगे याते महाकालवनेगतः। यत्रमाहेश्वरंलिङ्गंसुन्दरंकुण्डमद्भुतम्॥ ५०
तत्रापिक्षणमात्रेणसिंहेनविनिपातितः। घातयित्वाचतंपापं जलार्थीकुण्डमाविशत्

ब्रह्मा रुद्रश्च कालश्च लोकपाला महौजसः ।
केचिद् ध्यानपराः सिद्धास्तापसाः शंसितव्रताः ॥ १५ ॥
तिष्ठन्ति बहुयुगं व्यास यावत्कल्पः समाप्यते । सुदर्शनसमाकारं पूरितं चामृताम्बुभिः
दिव्याभिप्रायसंयुक्तं पारिजातगुणान्वितम् ।
दिव्यस्त्रीस्नानगन्धोदैर्वासितं तु सदैव हि ( वासितोद्गारिसौरभम् )
क्वचिन्मयूरा नृत्यन्ति क्वचित् कूजन्ति कोकिलाः ।
क्वचिच्च केकाभिरवाः क्वचिद्‌घोषं समाकुलम् ॥ १८ ॥
सुन्दरं सुन्दराकारं सुन्दरं तत्तथोच्यते । बहुपुण्यकरं व्यास सर्वपापहरं परम् ॥
यत्र सन्निहितो विष्णुः शिवः शक्रयुतो वशी । उपास्ते ऋषिरेशं भवत्सर्वकालेषु सर्वदा
क्षणार्द्धं क्षणमेकं च सुन्दरकुण्डे नरो वसेत् । वैकुण्ठे नियतं वासं यावत्कल्पशतं भवेत्
पतङ्गाः पक्षिणः कीटा मृता यान्ति शिवालयम् ।
किं पुनर्मानवा लोके स्नानपूतास्तु तज्जले ॥ २२ ॥
योदद्यात्तिलान्धेनुं गजवाजिरथाश्चनीम । वासांसि ग्रामसुवर्णं च रत्नानि विविधानि च
शय्यादानं विमानानि दानानि विविधानि च । तत्सर्वं दानजं तैश्च कोटिगुणं व्यास फलं भवेत्
भूयः शृणु परं व्यास सुन्दरकुण्डफलं स्मृतम् । एकदा बहुपापेन पतितः पापयोनिषु
पिशाचो मोक्षमापन्नः शिवरूपधरो गतः । पिशाचमोचने स्नात्वा दृष्ट्वा देवं महेश्वरम्
मुच्यते सर्वपापेभ्यो यद्यपि ब्रह्महा भवेत् ।

व्यास उवाच

कः पिशाच इति ख्यातः किं तेन दुष्कृतं कृतम् ॥ २३ ॥
येन पापप्रसङ्गेन पिशाचत्वं समागतः । कथं तीर्थे प्रसङ्गोऽस्य जातो वै द्विजसत्तम
एतद्वेदितुमिच्छामि त्वत्तो ब्रह्मविदांवर ।

सनत्कुमार उवाच

शृणु व्यास महाख्यानं तीर्थमाहात्म्यमुत्तमम् ॥ २६ ॥
यस्य श्रवणमात्रेण सर्वपापक्षयो भवेत् । ब्राह्मणो देवलो नाम ऋषिकाले...

[म]त्सत्रेमयितिष्ठेत्सु सर्वेषामपिदेहिनाम्। तेनाहंवैमराक्रान्ता नोशक्ताचलितुंधराम्
[न]ीलवासाविवर्णाच सर्वधर्मबहिर्मुखैः। यत्किञ्चित्क्रियतेकर्म शुभंवायदिवाशुभम्
[म]यित्यक्त्वापुनर्यान्तिजन्तवःसर्वशोऽमलाः। तिष्ठन्तिपुण्यलोकेषुभुक्तिमुक्तिप्रदेषुच
अस्माकंचमहत्कष्टं जातंधातः परमलम्। नहिशर्मनैवशान्तिर्ननिद्रानचनिर्वृतिः॥
नहिलोकेस्थितिर्मेऽत्र पापिष्ठायामनातनी। दुष्टसङ्गोद्भवैर्दोषैः प्लाविताहंजगद्गुरो
किंकरोमिक्वगच्छामि येनशान्तिर्भवेन्मम। किंतपःकिञ्चदानंमेकिंतीर्थंकिंचसाधनम्
येनाहंपापलिप्ताङ्गी पूर्वप्रकृतिमाप्नुयाम्। एवंज्ञात्वामहायोगिन् यथायोग्यंतथाकुरु

ब्रह्मोवाच

श्रूयताम्भोःसरिच्छ्रेष्ठे! कारणं पापनाशनम्।
महाकालवने रम्ये पुरी लोपाऽमरावती॥ १३॥
तत्रक्षिप्रासरिच्छ्रेष्ठा वर्ततेभुविपावनी। तस्यादर्शनमात्रेण सर्वपापक्षयोभवेत्॥
तत्रगच्छमहाभागे सद्यश्चात्मविशुद्धये। ब्रह्मणेदंसमाख्यातं श्रुत्वागङ्गासरिद्वरा॥
तमभिप्रायसम्प्राप्ता महाकालवनंशुभम्। पुष्करस्याग्रमार्गेच यत्रदेवोमरुत्सुतः॥
विन्ध्यस्य चोत्तरेभागे अञ्जन्याश्रममुत्तमम्।
सा पुत्रेण तपस्तेपे पवित्रा ब्रह्मचारिणी॥ १७॥
पतिव्रताभिः सर्वाभिःपतिभिर्ब्रह्मचारिभिः। देवाङ्गनाभिर्बहुभिःक्रीडद्भिर्बालकुञ्जरैः
सरसीफुल्लकह्लारैर्मत्तालिकुलनादितम्। निर्वैरजन्तुभिःसेव्यं ब्रह्मर्षिगणसेवितम्॥
मनआह्लादकंपुण्यं पवित्रंपापनाशनम्। तत्रप्रवेशमात्रेणनीलवासासरिद्वरा॥ २०॥
शुक्लवासाभवत्सातु नष्टपापमलाशुभा। शरच्चन्द्रनिभाकारा धूतपापायशस्विनी॥
तत्रैवचाश्रमंचक्रेमनसोहर्षकारणम्। ततःप्रभृतिसमाख्यातं सर्वलोकेषुपुण्यदम्॥ २२
नीलगङ्गेति तत्तीर्थं व्यास! किल्बिषनाशनम्।
अस्मिंस्तीर्थे नरः स्नात्वा हनुमन्तमथार्चयेत्॥ २३॥
तस्यसिद्धिः करगता भविष्यतिनसंशयः। आश्विनेमासिसंप्राप्तेकृष्णपक्षेसमाहितः
दर्शेपितॄन्समुद्दिश्यश्राद्धंकुर्यान्महालयम्। तारितंतेनस्वकुलंसर्वमेकोत्तरंशतम्॥

दग्धान्तरगतश्चास्थिपतितन्मुखाऽनले । तेनपुण्यप्रभावेणसर्वपापं क्षयं गतम् ।
मृतमात्रे च लिङ्गे तस्मिन्नन्तरगतं तदा । हित्वापैशाचिकंदेहं ज्योतिस्तल्लिङ्गमाविशत्
तदारभ्यवरव्यासतीर्थंपैशाचमोचनम् । पिशाचमोचनेशाख्योभुविविख्यातताङ्गत
तावद् गर्जन्ति पापानि मदोन्मत्ता गजाइव ।
यावन्नायाति शिप्राया तीर्थे पैशाचमोचने ॥ ५१ ॥
पिशाचमोचने स्नात्वा शुचिर्भूत्वा समाहित ।
पिशाचमोचनेशस्य पूजयित्वा यथाविधि ॥ ५६ ॥
सर्वपापविशुद्धात्मा जायतेनात्रसंशय । पिशाचमोचनेव्यास महादानानिकारयेत्
मनस्यपुनरावृत्ति शिवलोकात्कदाचन । पिशाचमोचनकथा पवित्रापापहारिणीम्
पठनाच्छ्रवणाच्चैव हयमेधफलं लभेत् ॥ ५८ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्या संहितायां पञ्चमेऽवन्तीखण्डेऽ
वन्तीक्षेत्रमाहात्म्येपुन्दरकुण्डपिशाचमोचनमाहात्म्यनामचतु षष्टितमोऽध्याय ॥६४

---

## पञ्चषष्टितमोऽध्याय

### नीलगङ्गामाहात्म्यवर्णनम्

व्यास उवाच

भूयस्तुश्रोतुमिच्छामित्वत्तोब्रह्मविदांवर । नीलगङ्गाकदाब्रह्मन्शिप्राकुण्डेसमागा

सनत्कुमार उवाच

शृणु व्यासमहातीर्थं सर्वतीर्थफलप्रदम् । नीलगङ्गानर स्नात्वासङ्गमेश्वरमर्चयेत्
दुष्टसङ्गोद्भवादोषा नभवन्तिकदाचन । एकदाब्रह्मलोकेच गङ्गात्रिपथगानदी ॥ २
गतापुनस्त्रीँल्लोकाञ्जित्वामाशुचार्दिता । भगवन्किमिदञ्जातं पातकमेहतमुर
दुणचारपरामऽत्र येनैवाप्रापिनादृशा । सर्वलोकेपुयत्किञ्चिज्जनानांपातकंभुवि।

आराधनं तदा चक्रे तस्या देव्या वरेप्सया ॥ ४ ॥

ंसविद्रावणकरीमसुराणांक्षयंकरीम् । भारावतारणींपुण्यां बलस्यभगिनींशुभाम्

यशोदागर्भसम्भूतां चाणूरबलमर्दिनीम् ।

विद्युद्रूपां नभस्थां तु कृष्णां कृष्णाहिमर्दिनीम् ॥ ६ ॥

जननींदेवसेनस्य कवीनांवाक्यदेवताम् । गायत्रींद्विजमुख्यानां बृहतींछन्दसांवराम्

सहस्राक्षीं सुरेन्द्रस्य ऋषेश्चारुन्धतीम्पराम् ।

गवांकामदुघां श्यामां लतां मधुतमप्रियाम् ॥ ८ ॥

अदितिं सर्वमातॄणां पार्वतीं सर्वयोषिताम् ।

ज्योत्स्नाञ्चान्द्रमसीं बालां सर्वकामवरप्रदाम् ॥ ६ ॥

शारदांऋतुवेलायांवृन्दावनचरींवराम् । मायिनांवैष्णवींमायांसर्वदैत्यविमोहिनीम्

महालक्ष्मीं श्रीमभीष्टां यक्षिणीं धनदार्चिताम् ।

महोदधीप्सितां वेलां राज्ञां कायेषु चक्रिणीम् ॥ ११ ॥

वेदिकांयज्ञशालानां वराहस्यावनींशुभाम् । दक्षिणांसर्वदीक्षाणांसर्वकामफलप्रदाम्

एवंस्तुतातदादेवी प्रत्यक्षाविन्ध्यवासिनी । प्राहप्रसादसुमुखी ऋषीणांप्रवरंऋषिम्

व्रियताम्भोद्विजश्रेष्ठ! तदस्मत्तोऽभिवाञ्छितम् ।

यदीप्सितं त्वया वत्स! स्तुतिर्मे सुचिरं कृता ॥ १४ ॥

अगस्तिरुवाच

यदिमातर्वरोदेयोदेवानामुपकारिणि! । रेवेयंवर्द्धितालोके सर्वलोकभयप्रदा ॥ १५ ॥

तयेदंप्लावितंविश्वं तस्यानिग्रहणंकुरु । इतिसाप्रार्थितातेन तदाकालेमहर्षिणा

अगात्साध्वी तदा व्यास! महाकालवनं शुभम् ।

सान्त्वपूर्वं वचः पथ्यमगस्तिमिदमब्रवीत् ॥ १७ ॥

धारयिष्येपरान्देवींवर्द्धमानांद्रुतंऋषे । तावत्त्वंऋषिभिः सार्कंविन्ध्यस्यचमहागिरेः

परमेत्रिकुटेद्वारे स्थास्यसिऋषिसत्तम! । पुरीह्येषामुनिश्रेष्ठ त्रिपुलोकेषुविश्रुता

अत्रैवसुचिरंकालं मातृभिर्निवसाम्यहम् । तत्रापित्वंसदासिद्धक्षेत्राधिपतिमाप्नुहि

सप्तगोत्रेषुयेजाता पूर्वजा पितरस्तथा। तेसर्वेसद्गतियान्ति तेषांलोकाःसनातनाः
स्नात्वातिलाञ्जलिंदद्यात्पितॄनुद्दिश्यतत्परः । अक्षयाजायतेतृप्तिः स्वर्गलोकेमहीयते
भोजयेद्ब्राह्मणान्सत्र श्राद्धंदत्त्वातुपायसैः । अक्षयलभतेश्राद्धमश्वमेधफलंभवेत् ॥
तीर्थंपुण्यसरव्यास शृणुपुण्यतरस्थलम् । दुग्धकुण्डमितिख्यातं त्रिषुलोकेषुविश्रुतम्
सर्वपापहरपुण्यं सर्वकामवरप्रदम् । पुरा दुग्धा धरादेवी पृथुना धर्ममूर्तिना ॥ ३० ॥
दुग्धसर्वंदयिमोध्य सर्वेषांजीवनप्रदम् । दत्तनिधायकुण्डेऽस्मिंस्तेनदुग्धसरःस्मृतम्
कुण्डे स्नात्वा पयः पीत्वा दत्त्वा गाश्च पयस्विनीम् ।
सर्वबाधाविनिर्मुक्तो धनधान्यसमन्वितः ॥ ३२ ॥
जायतेसर्वकालेषु मृतः स्वर्गपुरंव्रजेत् । ततः पुष्करमासाद्य स्नानदानादिकंचरेत् ॥
सर्वपापविशुद्धात्मा पुष्करस्य फलं लभेत् ॥ ३४ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
ऽवन्तीक्षेत्रमाहात्म्येनीलगङ्गामाहात्म्यंनामपञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः

### विन्ध्यावासिनीनिमलोदतीर्थवर्णनम्

व्यास उवाच

कोऽसौविन्ध्यगिरिर्ब्रह्मन् कदाकालेसमागतः । महाकालवनेरम्ये केनवाप्रेषितः
सनत्कुमार उवाच

पुरादेवाजलैर्व्यास प्लावितैषावसुन्धरा । तदासर्वसुरैरेवमगस्तिर्मुनिसत्तम
आराधितो महाभाग धरणीत्राणकारणात् ।
तदागत्य गिरौ रम्ये विन्ध्ये स मुनिसत्तम ॥ ३ ॥
एकाग्रमानसो भूत्वा भवानीं विन्ध्यवासिनाम् ।

आराधनं तदा चक्रे तस्या देव्या वरेप्सया ॥ ४ ॥

कंसविद्रावणकरीमसुराणांक्षयंकरीम् । भारावतारणींपुण्यां वलस्यभगिनींशुभाम्

यशोदागर्भसम्भूतां चाणूरवलमर्दिनीम् ।

विद्युद्रूपां नभस्थां तु कृष्णां कृष्णाहिमर्दिनीम् ॥ ६ ॥

जननींदेवसेनस्य कवीनांवाक्यदेवताम् । गायत्रींद्विजमुख्यानां वृहतींछन्दसांवराम्

सहस्राक्षीं सुरेन्द्रस्य ऋषेश्चारुन्धतीम्पराम् ।

गवांकामदुघां श्यामां लतां मधुतमप्रियाम् ॥ ८ ॥

अदितिं सर्वमातॄणां पार्वतीं सर्वयोषिताम् ।

ज्योत्स्नाञ्चान्द्रमसीं वालां सर्वकामवरप्रदाम् ॥ ६ ॥

शारदांक्रतुवेलायांवृन्दावनचरींवराम् । मायिनांवैष्णवींमायांसर्वदैत्यविमोहिनीम्

महालक्ष्मीं श्रीमभीष्टां यक्षिणीं धनदार्चिताम् ।

महोदधीप्सितां वेलां राज्ञां कार्येषु चक्रिणीम् ॥ ११ ॥

वेदिकांयज्ञशालानां वराहस्यावनींशुभाम् । दक्षिणांसर्वदीक्षाणांसर्वकामफलप्रदाम्

एवंस्तुतातदादेवी प्रत्यक्षाविन्ध्यवासिनी । प्राहप्रसादसुमुखी ऋषीणांप्रवरंऋषिम्

व्रियताम्भोद्विजश्रेष्ठ! तदस्मत्तोऽभिवाञ्छितम् ।

यदीप्सितं त्वया वत्स! स्तुतिर्मे सुचिरं कृता ॥ १४ ॥

अगस्तिरुवाच

यदिमातर्वरोदेयोदेवानामुपकारिणि! । रेवेयंवर्द्धितालोके सर्वलोकभयप्रदा ॥ १५ ॥

तयेदंप्लावितंविश्वं तस्यानिग्रहणंकुरु । इतिसाप्रार्थितातेन तदाकालेमहर्षिणा

अगात्साध्वी तदा व्यास! महाकालवनं शुभम् ।

सान्त्वपूर्वं वचः पथ्यमगस्तिमिदमब्रवीत् ॥ १७ ॥

धारयिष्येपरान्देवींवर्द्धमानांद्रुतंऋषे । तावत्त्वंऋषिभिः साकंविन्ध्यस्यचमहागिरेः

परमेत्रिकुटेद्वारे स्थास्यसिऋषिसत्तम! । पुरीह्येषामुनिश्रेष्ठ त्रिपुलोकेषुविश्रुता

अत्रैवसुचिरंकालं मातृभिर्निवसाम्यहम् । तत्रापित्वंसदासिद्धक्षेत्राधिपतिमाप्नुहि

मत्सरोनिर्मलपुण्यविमलोदन्तुविश्रुतम् । यत्रपुण्यतांवासोदेव्यस्तिष्ठन्तिकोटिश

तस्मिंस्तीर्थे नराः स्नात्वा भूत्वा चैव समाहिताः ।
यजन्ति चैव मां भक्त्या धूपदीपाग्नितर्पणैः ॥ २२ ॥
क्षीरखण्डाज्यभोज्यैश्च भोजयेद्विविधद्विजान् ।
न तेषां दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते ॥ २३ ॥
धनधान्यवरैश्वर्यपुत्रदारादिसम्पदः ।
प्राप्नोति विविधान् भोगान् देवानामपि दुर्लभान् ॥ २४ ॥

महानुभोमर्त्यैर्यांस्वयुम्योपानराननं । महारज्ञानन्तीर्थाभावस्वदाविरमभविष्यति

दीर्घायुर्द्धिमांल्लोके ऽपि वा शाश्वती समाः ।
सर्वपापविशुद्धात्मा मृतः शिवपुरं व्रजेत् ॥ २५ ॥
एवं व्यास पुराऽप्राप्य रम्यां चोग्रगिनीं शुभाम् ।
समाश्रिता सदा देवी सततं विन्ध्यवासिनी ॥ २७ ॥
तस्मिंस्तीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।
स्त्रियो या रजोवीता वन्ध्या वै काकवन्ध्यकाः ॥ २८ ॥
दुर्भगा हीनदाना च सर्वकामविवर्जिता ।
विमलोदेऽपि सा स्नात्वा दृष्ट्वा वै विन्ध्यवासिनीम् ॥ २९ ॥

सुवर्णैस्तपरोदैन्तु नात्रकार्याविचारणा । मनुजा प्राप्नुयुः पुत्रानवन्ध्यावीरवनितार प्राप्नोतिसवर्गीभाग्यं सर्वकामफलप्रदम् । विधवापाप्नोतिविप्र क्षांमयोपितवीमवेः वैश्यभपद्लाभाय सुदृम्नुसुखनरत्वं । कथामुण्यवर्णमिमां सर्वकामफलप्रदाम पठनाच्छ्रवणादापि सोमदफलमश्नुते ॥ ३३ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे
स्थावन्तीक्षेत्रमाहात्म्ये विन्ध्यवासिनीविमलोदतीर्थमाहात्म्यं नाम
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

# सप्तषष्टितमोध्यायः

## क्षातासङ्गममाहात्म्यवर्णनम्

सनत्कुमार उवाच

तीर्थमन्यतरंव्यास क्षातासङ्गमसम्भवम् । यत्रतुस्नानमात्रेण महापापैःप्रमुच्यते
अमावैशनिवारेण यदायातिसमाहितः। पितृनुद्दिश्ययः कुर्याच्छ्राद्धंचैवतिलोदकम्
पश्येच्छनैश्चरंदेवंस्थावरंलिङ्गमुत्तमम्। तस्यशानिश्चरीपीडा नभवेत्तुकदाचन॥

व्यास उवाच

महातीर्थंसमाख्यातं महाकालवनेशुभे। भूयस्तुश्रोतुमिच्छामिविस्तरेणतपोधन

सनत्कुमार उवाच

श्रूयतांभोद्विजश्रेष्ठ!कथापौराणिकीशुभा । यस्याःश्रवणमात्रेणमहापापक्षयोभवेत्
रेवाचर्मण्वती क्षातातिस्रोनद्यः पुरानघ। त्रैलोक्यपावनीर्जाताभुविचामरकण्टकात्
पुण्याःपुण्यजला रम्याः पवित्राः पापहारिणीः ( हारकाः )।
पुनन्त्यः सर्वलोकानां पापिनः पापकारिणः ( स्नानात्पानात्तथापगाः )
एकदोपवनेरम्ये मान्धातृक्षेत्रउत्तमे। मिथोरमन्तिसंहृष्टाः परस्परजिगीषया॥ ८॥
किञ्चिद्दोषप्रसङ्गेनमिथोभेदोह्यजायत। रेवासङ्गंपरित्यज्यभित्त्वाविन्ध्यगिरिंचिरम्
महाकालवनेरम्ये समायातासरिद्वरा। यत्रक्षिप्रामहापुण्यापुरीह्यापाऽमरावती॥ १०
सर्वतीर्थवरंश्रेष्ठं नाम्नारुद्रसरः स्मृतम्। भुक्तिमुक्तिप्रदंनित्यं सिद्धर्षिगणसेवितम्
यत्रागत्यपुराक्षाता क्षिप्रासङ्गंसमाश्रिता। तत्रतीर्थंपरंजातं क्षातासङ्गमसंज्ञितम्॥
यत्रधूतरजो ( जा ) जातः सद्यःप्रोक्तो विभावसुः।

व्यास उवाच

कथं सूर्यस्त्वया प्रोक्तो विरजो ह्यभवत्पुरा॥ १३
एतद्वेदितुमिच्छामि त्वत्तो ब्रह्मविदाम्वर!।

तंदृष्ट्वासहसोत्थाय त्वष्टालोकपितामहः । पाद्यार्घाचमनीयादिमधुपर्कैरपूजयत्

नत्वा पादौपरिक्रम्यबहुमानपुरःसरम् । ऊचे मधुरयावाचा प्रियन्तेकरवामकिम्

रविरुवाच

कसातुसंज्ञासावित्री ममविप्रियकारिणी। आगता ते गृहं तात!ममर्मार्गानुभेदिनी

त्वष्टोवाच

नहिजानीमहेतात प्रियायास्तेगतागतम्। इत्युक्ते वचनेत्वष्ट्रा रविर्दुःखितमानसः

किंकरोमिक्वगच्छामि क्वचप्रियतरामम। इतिसम्भाषमाणेतुत्वष्टावाक्यमथाब्रवीत्

तवतेजः परिभ्रष्टा भग्नाक्वापिगतावला । यदितेवल्लभाभार्या तेजस्त्वम्परिशामय

सूर्य उवाच

यद्येवंदुःसहंतेजो ममापूर्वंपितामह । यथातेरोचतेसम्यक् तथामेवर्पणंकुरु ॥ ४० ॥

इति सूर्यवचः श्रुत्वा शाणं कृत्वा सुदर्शनम्।

घृष्टितः क्षुरधारेण लवीयान्निर्मलोऽभवत् ॥ ४१ ॥

तस्यवर्पितमात्रेणत्वष्टाचक्रेविवस्वतः। शा (श्रो) णंसुदर्शनंचक्रेसैकतामणिजातयः

तदात्वष्टाऽब्रवीद्वाक्यंमधुरंसूर्यसन्निधौ । महाकालवने रम्ये वडवा रूपधारिणी॥

गृह्यतांभोः सुरश्रेष्ठशीघ्रंगच्छतुशाड्वले। यत्रक्षिप्रासरिच्छ्रेष्ठायत्रक्षातासमागता

उभयोः सङ्गमो यत्रतत्रमुक्तिर्नसंशयः । तत्रसासुभगापत्नी प्राप्यते ते नसंशयः॥

इतितस्यवचः श्रुत्वा सवितासर्वतापनः। तत्रागच्छद्वनंयत्र महाकालस्यपावनम्॥

क्षातासङ्गमसंयुक्तायत्रक्षिप्रापयस्विनी । तत्रभुक्तिश्चमुक्तिश्च धनधान्यसमागमः॥

तत्रागत्य प्रियाम्भार्यां वडवारूपधारिणीम्।

ददर्श तामुनःश्यामां हरिरूपधरो हरिः ॥ ४८ ॥

नासिकाघ्राणमात्रेण यौ जातावाश्विनावुभौ।

दर्शनीयौ सुनृम्णाङ्गौ भिषजौ तौ दिवौकसाम् ॥ ४६ ॥

छायायसुपुत्रेतत्र मिथुनंद्विजसत्तम! । तापींशनैश्चरं चैव सर्वलोकप्रतापनम्॥

शनियोगेयदाऽमावै जायतेसर्वकामदा । तदास्नानंतदादानं श्राद्धंचैवतुकारयेत्॥

तस्यहस्तगतालक्ष्मीआयतेसर्वदाभुवि । य श्वातासङ्गमेस्नात्वादानदद्याच्छक्तित

स्थावरेश्वरमभ्यर्च्यतस्यपापक्षयोभवेत् ।

सौरि शनैश्चरोमन्द कृष्णोऽनन्तोऽन्तकोयम ॥ ५३ ॥

पिङ्गरछायासुतोचक्रः स्थावर पिप्पलायन ।

एतानि शनिनामानि प्रात काले पठेन्नर ॥ ५५ ॥

तस्यशनैश्चरीपीडा नभवेत्तकदाचन । धर्मोऽपिसाक्षाद्वैव तपस्तेपेसुदुस्तरम् ॥

यत्रकुण्डोत्तरेभागे तत्रतिष्ठतिमारुति । धर्मसरइतिख्यातनाम्नातीर्थमनुत्तमम् ॥

यत्र सिद्धिम्परा प्राप्तस्तपसा पवनात्मज ।

तस्मिस्तीर्थे नर स्नात्वा दत्वा वै काम्यभाजनम् ॥ ५७ ॥

सघासो मणिमुक्ताभि काञ्चनालङ्कृतवरम् ।

ब्राह्मणेभ्योऽलङ्कृतेभ्यो वेदविद्भ्यश्च सादरात् ( म ) ॥ ५८ ॥

मातृलोकमनुप्राप्योब्रह्मलोकेमहीयते । श्रावणेधवलेपक्षेएकादश्यानुयोनर ॥ ५९ ॥

धर्मतीर्थे सदाचारा स्नानदानादिका क्रिया ।

करोति सतत तस्य विष्णुलोक सनातनम् ॥ ६० ॥

च्यवनाश्रमे नर स्नात्वा च्यवनेश विलोकयेत् ।

यत्र सिद्धि गतो पुण्यावाश्विनी भिषजाम्वरौ ॥ ६१ ॥

च्यवनस्यप्रसादेनदेवपङ्क्तिमवापतु । च्यवनेन पुराहृपि प्रासाद्देवभेषजात् ॥ ६२

तस्मिस्तीर्थेद्विजश्रेष्ठाद्वदृष्टिभवेन्नर । अत्रैवप्राप्तवानस्य साग्निहोत्राश्रमम्परम्

सत सहस्रमहाभागा सावित्रालोकविश्रुता । सूर्यलोकसमासाद्यभुञ्जेविपुलाश्रियम्

तस्माद्व्यासापरंतीर्थं क्षातासङ्गमसञ्ज्ञितम् । सर्वपापहरम्पुण्य सर्वकामवरप्रदम् ॥

यएतासुकथाम्पुण्या शृणोतिभुविमानव । पठेद्वाप्रातरुत्थाय तस्यपुण्यफलंशृणु

कपिलागोसहस्रेण फलम्भवतिपर्वणि । तत्फल समवाप्नोति नात्रकार्याविचारणा

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्या सहिताया पञ्चमेऽवन्तीखण्डे

क्षातासङ्गममाहात्म्य नामसप्तषष्टितमोऽध्याय ॥ ६७ ॥

# अष्टषष्टितमोऽध्यायः

## गयातीर्थमाहात्म्येगयातीर्थप्रशंसनम्

सनत्कुमार उवाच

शृणु व्यास!प्रवक्ष्यामि तीर्थमेकमतः परम् ॥ १ ॥

तीर्थानामुत्तमंतीर्थं गयानामेतिनामतः । यत्रस्नात्वानरोनित्यंमुच्यतेचऋणत्रयात्

देवान् पितॄन्समभ्यर्च्य विष्णुलोकं स गच्छति ।

व्यास उवाच

कीकटेषुगयापुण्या नदीपुण्या पुना पुनः( पुनःपुना ) ॥ ३ ॥

तीर्थानामुत्तमंतीर्थंपुण्योराजगिरिस्तथा(च्यवनस्याश्रमःपुण्यःपुण्योराजगिरिस्तथा)

सकथंविदितोदेशे महाकालवनेशुभे । एतद्वेदितुमिच्छामि विस्तरेण तपोधन! ।

सनत्कुमार उवाच

शृणु व्यास!कथाम्पुण्यां पवित्रां पापहारिणीम् ॥ ५ ॥

यस्याः श्रवणमात्रेण पितरोयान्तिसद्गतिम् । पुराकृतयुगेपुण्ये युगादिदेवनामतः ॥

राजासीत्सतुधर्मात्मापुण्यश्रवणकीर्तनः । तस्यपालयतःसम्यक्प्रजाःपुत्रानिवौरसान्

बभूवुःसर्वसम्पन्ना वर्द्धमानाःसमन्ततः । धर्मश्चतुष्पदोनित्यं यस्मिन्राज्ञिप्रशासति

कालेवर्षी च पर्जन्यो ऋतवः स्वाङ्गधारिणः ।

बहुसस्यफला पृथ्वी गावश्च बहुदुग्धदाः ॥ ८ ॥

वेदवादरताविप्राः क्षत्रियाबाहुशालिनः । वैश्याधनपरा नित्यं शूद्राःशुश्रूषणेरताः ॥

वर्णाश्रमरताःसर्वे सर्वधर्मोपदेशकाः । श्रुतिस्मृतिपरोधर्मोहृष्टपुष्टजनाकरः ॥ ११ ॥

नाधिव्याध्यभिसम्भूता लक्ष्यन्ते केऽपि मानवाः ।

दुःशीला दुर्भगा नार्या विधवा नो तथैवच ॥ १२

बहुपुत्राल्पपुत्राश्च मृतपुत्रानवन्ध्यकाः । रूपशीलगुणोपेताः पतिव्रतपरायणाः ॥

एवपरापरञ्चमार्गं प्रवर्त्तन्तेसनातनम् । तथापिपितरोह्येते समाख्यातास्त्वपश्चिमि
तञ्सर्वंसम्प्रवक्ष्यामि यथाश्रुतंतथाशृणु । यथैतपितरो देवा देवाश्चपितरस्तथा १०
अन्योन्यपितरोह्येते देवाः पितृगणो सह । मार्कण्डेनपुरापृष्टं प्रश्नमेतद्विजोत्तम ॥ ११

निबोधयामि ते व्यास' निखिलं यथमादितः ।

यावन्तस्ते पितृगणास्तस्मिँल्लोके च से गताः ॥ १२ ॥

सनत्कुमार उवाच

सप्तैतेयजतांश्रेष्ठाः सर्वेपितृगणाःस्मृताः । चत्वारोमूर्तिमन्तोवै त्रयस्तेषाममूर्तय
तेषांल्लोकविसर्गंश्चकीर्तयिष्यामितच्छृणु । प्रभावरचमद्दश्चैव पितरस्तेतपोधन ॥
धर्ममूर्तिधरास्तत्रा त्रयोयेपरमागताः । सर्वानामानिलोकांश्चकीर्तयिष्यामितच्छृणु

लोकाः सनातनानाम यत्र तिष्ठन्ति भास्वराः ।

अमूर्तय पितृणास्ते वै पुत्राः प्रजापतेः ॥ १६ ॥

विराजस्यद्विजश्रेष्ठ वैराजाइतिन श्रुतम् । यजन्तैतान् देवगणा विधिदृष्टेनकर्मणा
एतेवै योगविभ्रष्टा लोकान्प्राप्यसनातनान् । पुनर्युगसहस्रान्ते जायन्त ब्रह्मवादिनः

ते प्राप्य तां स्मृतिंभूय साङ्ख्ययोगमनुत्तमम् ।

यान्ति योगगतिं सिद्धाः पुनरावृत्तिदुर्लभाम् १९ ॥

एतेस्तु पितरस्तात योगिनायोगवर्द्धना । आप्याययन्तियेपूर्वं सोमयोगबलेनवै

तस्माच्छ्राद्धानि दीयन्ते योगिना द्विजसत्तमा ।

एत वै प्रथम कल्प सोपानमिति विश्रुतम् ॥ २१ ॥

एतषा मानसी कन्या मेनानाममहागिरेः । पत्नीहिमवतः श्रेष्ठा यस्यामैनाकउच्यते

मैनाकस्य सुत श्रीमान् क्रौञ्चो नाम महागिरिः ।

अग्निष्वात्ता पितृगणास्तत्र तिष्ठन्ति भास्वराः ॥ २३ ॥

याम्या वह्निवदाभासन् यमाद्याश्चैव पश्चिमाम् ।

सोमपाश्चोत्तरामाशा दिशं धनदपालिताम् ॥ २४ ॥

अमूर्तिमन्तावाकाशे कव्यवाडनलौ क्षितौ ॥ २५ ॥

यक्षरक्षःपिशाचाश्च यजन्ते भावितात्मनः ।
साध्या देवान्यजन्तिस्म विश्वेदेवा ऋषींस्तथा ॥ २६ ॥
मानवाः श्राद्धदेवं च ऋषयो ब्रह्म सनातनम् । एवं परम्पराप्राप्तः श्राद्धधर्मः सनातनः
देवकार्यात्परं कार्यं पितृकार्यं विशिष्यते । भरद्वाजात्मजाः सप्त श्राद्धधर्मपरायणाः
जातिस्मरत्वमापन्ना निर्वाणपदवीं गताः ।
गुरोश्च दोग्ध्रीं गां हत्वा मन्त्रैर्वै द्विजाधमाः ॥ २६ ॥
पितॄनुद्दिश्य ते सर्वे भक्षयन्तः क्षुधार्दिताः । तेन पुण्यप्रभावेण योगभ्रष्टा दिवंगताः
सप्त जातिस्मरास्ते वै योगयुक्ता बभूविरे ।
तस्माच्छ्राद्धं परं प्रोक्तं सूरिभिः परमात्मभिः ॥ ३१ ॥
श्राद्धे प्रतिष्ठिता लोकाः श्राद्धे योगः परन्तप! ।
एवं ते पितरः प्रोक्ताः श्राद्धस्य च विधिं शृणु ॥ ३२ ॥
ब्रह्मचर्यरतो दान्तो नक्रोधी न चमत्सरी । शौचाचारपरोधीरःशास्त्रदृष्टिर्जितेन्द्रियः
एवं यः कुरुते श्राद्धंतीर्थे चैवविशेषतः । ततोऽधिकतराप्रोक्ता तृप्तिर्व्यास क्षयेऽहनि
वृद्धिश्राद्धे तथा प्रोक्ता महालयेशताधिका । ततो दशगुणाप्रोक्ताप्रयागे द्विजसत्तम
प्रयागाद्दशगुणा तृप्तिः कुरुक्षेत्रे च सत्तम ।
कुरुक्षेत्रात्ततो व्यास दशाधिका गया स्मृता ॥ ३६ ॥
ततो दशाधिका व्यासमहाकालवने शुभे । अवन्त्यामर्चनःपुण्यं गयातीर्थे चसर्वदा
येषां निरयमापन्नाः पितरो जन्मजन्मनि । तेषामुद्धरणार्थाय तीर्थमेतत्सुदुर्लभम्
सकृत्स्मरणमात्रेण पितॄणां दत्तमक्षयम् । ये नरा रणमध्यस्थाः पितृवंशविवर्जिताः
गर्भपाते मृता ये च नामगोत्रच्युतास्तथा । स्वगोत्रे परगोत्रे वा आत्मघातमृताःपरे
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयताम् । उद्बन्धनमृता येच विषशस्त्रैर्मृताश्चये
दंष्ट्रिभिर्भक्षितो वापि दौर्ब्राह्मण्ये मृताश्च ये । तेषामुद्धरणार्थाय अत्रश्राद्धं विधीयते
अग्निदग्धाश्च ये जीवा नाग्निदग्धास्तथा परे ॥ ४३ ॥
विद्युद्घातेन ये केचित्मुद्गराभिहताः परे । तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते

तृषार्ताः क्षुधिताश्चैवहापिताश्चैवयेमृताः। प्रेतयोनिं गताश्चैव म्लेच्छयोनिंगताश्चये
तेषामुद्धरणार्थाय अत्र श्राद्धं विधीयते ॥ ५८ ॥
एवं श्राद्धविधिं व्यास! तस्मिंस्तीर्थे समाचरेत्।
ऋणत्रयविनिर्मुक्तो वाञ्छितार्थं लभेत सः।
गयायां च समासाद्य सुरा इन्द्रपुरोगमाः।
चक्रुश्च विधिवत्सर्वे यदुक्तं देवभाषया ॥ ५९ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे-
ऽवन्तीक्षेत्रमाहात्म्ये गयामाहात्म्ये श्राद्धविधिवर्णनं
नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

## सप्ततितमोऽध्यायः

### गयातीर्थमाहात्म्यवर्णनम्

सनत्कुमार उवाच

ततः सुरगणाः सर्वे धूतपापाः समाहिताः। पुनर्योगबलं प्राप्य स्वाधिकारंययुः पुरा
एवं व्यास गयातीर्थं कुमुद्वत्यां सुनिश्चितम्।
गयायां यानि तीर्थानि पुण्यान्यायतनानि च ॥ २ ॥
तत्तीर्थेषु नरः स्नात्वा तत्तत्तीर्थफलं भवेत्। तथैव च गयाक्षेत्रं गयाश्राद्धफलप्रदम्
फल्गुश्च सरितां श्रेष्ठातथैवफलदायिनी। आदिगयावृद्धगया तथाविष्णुपदीस्मृता
गयाकोष्ठस्तथा प्रोक्तोगदाधरपदानि च। वेदिका षोडशी प्रोक्ता तथैवचाक्षयोवटः
प्रेतमुक्तिकरी नित्यं शिला चोक्ता तथैव च।
अच्छोदा निम्नगा प्रोक्ता पितॄणां चाश्रमोत्तमः ॥ ६ ॥
देवानां दानवानां च यक्षकिन्नररक्षसाम्। पन्नगानां च सर्वेषां तथैवाश्रम उत्तमः

एतत्स्थानेषु सर्वेषु स्नानदानादिकाः क्रियाः ।
श्राद्धं च विधिवत्कृत्वा तत्तत्तीर्थफलं लभेत् ॥ ८ ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः । तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्
एवं व्यास! गयातीर्थं पुरावन्त्यां प्रतिष्ठितम् ।
पश्चात्तु कीकटे जातं यत्रसंनिहितोऽसुरः ॥ १० ॥
तदारभ्य द्विजश्रेष्ठ गया तत्र प्रतिष्ठिता । गदाधरपदाघातैर्महासुरो निपातित
तत्पदे च महिमानं जनार्दनसमर्पितम् ॥ १२ ॥
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । यत्र तत्र करिष्यामि पितृणां दत्तमक्षय
सर्वदा सर्वकालेषु गयाश्राद्धं विधीयते ॥ १३ ॥
सम्वत्सरे परं व्यास! दिनमेकं प्रतिष्ठितम् । कन्यास्थे च दिवानाथे हस्तनक्षत्रसु
महालयेति तत्प्रोक्तं पितृणां दत्तमक्षयम् ॥ १४ ॥
सर्वदा सर्वकालेषु गयाश्राद्धं विधीयते ॥ १५ ॥
सम्वत्सरे परं व्यास दिनमेकं प्रतिष्ठितम् । अन्वष्टकायां कुर्वन्ति मातृणां श्राद्धमुत्तमं
अक्षया जायते तृप्तिः पितॄणां कल्पसङ्ख्यया ।
एवं व्यास! पुरी रम्या स्नानदानादिकर्मसु ॥ १७ ॥
भूयस्तु सम्प्रवक्ष्यामि माहात्म्यं परमाद्भुतम् ।
तदङ्कुत्य मयाख्यातं पवित्रं पापनाशनम् ॥ १८ ॥
सप्तर्षीणां च या भार्या ऋषिपत्न्यः पतिव्रताः ।
स्वाहादोषपरिम्लाना दूषिताः पावकेन च ॥ १९ ॥
ऋषिभिश्च परित्यक्ता यमुना च वनादनम् । एवं बहुतिथे काले नारदो देवदर्शन
तासां च प्रियमन्विच्छन्समायातो वनान्तरे ।
ताभिश्च सत्कृतो नित्यं समासीनो धृतव्रतः ॥ २१ ॥
उवाच श्लक्ष्णया वाचा देशकालोचितं वचः । किमिदं विश्वजातमपतीनापराभवः
कस्माच्च ऋषिभिस्त्यक्ता लोकमातरः पतिव्रताः ॥ २३ ॥

ऋषिपत्न्य ऊचुः

न जानीमो वयंतातयेनदोषेणतापसैः । विमुक्ताः साग्निकैःक्षिप्रं कार्तिकेयप्रसङ्गतः
लोकापवादजं किञ्चिज्जातंदिष्टवशाद्वयम् । किं कुर्मोवाक्वगच्छामःकितपःकाचदेवता
यस्याराधनपुण्येन पतिसान्निध्यमाप्नुयुः । एतन्निश्चित्य भोब्रह्मन्ब्रूहित्वंवेदतत्त्वतः
इति पृष्टस्तदा ताभिर्ऋषिपत्नीभिर्नारदः । उवाच सुचिरंध्यात्वातासांसशर्महेतवे

नारद उवाच

श्रूयतां भोस्तपःश्रेष्ठाभवतीनां च कारणम् । महाकालवने रम्येगयातीर्थमनुत्तमम्
तत्रैव चाक्षयो नाम न्यग्रोधः शाखिनां वरः । तत्रागमनमात्रेण धूतदोषाभविष्यथ
सर्वदोषहरं तीर्थं सर्वकामवरप्रदम् । सर्वसौख्यकरं पुण्यं तत्र गच्छत माचिरम्

नारदस्य वचः श्रुत्वा ऋषिपत्न्यः सुचोदिताः ।
महाकालवने व्यास! इच्छन्त्यः प्रियमात्मनः ॥ ३१ ॥

आजग्मुस्तद्वनं तत्र यत्रतीर्थंगयाभिधम् । तत्रगत्वाशुचीभूयस्नानदानादिकाःक्रियाः

कृतास्ताभिश्च पुण्याभिर्नभस्यस्यासितेतरे ।
पञ्चम्यामृषिसञ्ज्ञायां ताभिः सुचरितं व्रतम् ॥ ३३ ॥

उपोष्य चैकरात्रं तु जागरं चैव योगतः । कृतमात्रे व्रते व्यास धूतपापावभुःक्षणात्
भर्तृकोपपरिभ्रष्टाः सद्यः प्राप्ता गृहाश्रमम् । ऋषिभिःसाग्निकं दत्तं पूर्ववदृषिसत्तम

तदाप्रभृति लोकेऽस्मिन्पञ्चमी ऋषिसञ्ज्ञिता ।
ये नराश्चाथ नार्यो यास्तां कुर्वन्ति तु भक्तितः ॥ ३६ ॥
नीवाराहारकं कृत्वा शुचीभूय समाहिताः ॥ ३७ ॥

नतेषांजायतेकिञ्चिदापद्दुःखं कदाचन । दुर्भगत्वंचनारीणां न वियोगश्चमातृभिः

पुत्रतो धनतो वापि कदाचित्सम्भविष्यति ।
एवं व्यास! समाख्यातं यत्त्वया परिपृच्छितम् ॥ ३९ ॥

अवंत्यामीदृशं तीर्थं वर्तते भुविसत्तम । तादृशं पुण्यदं किञ्चिन्नास्तिब्रह्मांडगोलके

अस्मिंस्तीर्थे नरः कश्चिन्महादानानि चेच्चरेत् ।

अक्षयाणि भवन्त्यस्य विष्णुलोके महीयते ॥ ४१ ॥
यो वै नियमवान्भूत्वा कथामेतां शृणोति वा ।
पठेच्च सततं व्यासाद्धयमेधफलं लभेत् ॥ ४२ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽवन्तीक्षेत्रमाहात्म्ये गयातीर्थमाहात्म्यवर्णनं नामसप्ततितमोऽध्यायः ॥ ७० ॥

---

## एकसप्ततितमोऽध्यायः

### पुरुषोत्तमेश्वरमाहात्म्यवर्णनम्

व्यास उवाच

पुरुषोत्तम परं तीर्थं त्वयाप्रोक्तं पुरातनं । माहात्म्यं तस्य तीर्थस्य विस्तराद्वदमेप्रभो
एतत्तु श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ॥ १ ॥

सनत्कुमार उवाच

शृणुष्व भो द्विजश्रेष्ठ कथां पापहरां पराम् ॥ २ ॥
यस्याः श्रवणमात्रेण महापातकभी भवेत् । पुराकल्पेषु वै ब्रह्मन्वैकुण्ठे विमले शुभे
समासीनो रमानाथो पार्षदैः सनकादिभिः ।
महर्षिभिः सदाचारैः पितामहपुरोगमैः ॥ ४ ॥
ऋद्धिसिद्धिगुणोपेतैस्तथैस्तैर्मुद्दादिभिः ।
गणगन्धर्वसङ्घैश्च सेव्यमानः समन्ततः ॥ ५ ॥
किन्नरोद्गानसन्मार्गैर्नृत्यद्भिरप्सरोगणैः । चिंतामणिगृहोद्भारलक्षिताङ्गणभूमिषु
कल्पद्रुमस्तच्छाये आसीने हि सुरद्विषि ।
धर्मवादरताः सर्वे ब्रह्ममार्गसुनिश्चिताः ॥ ७ ॥
तेषां मध्ये परा माया ह्यपृच्छत्कमलापतिम् ॥ ८ ॥

लक्ष्मीरुवाच

पुण्यकानां विधिं नाथ! श्रोतुमिच्छामि तत्त्वतः ।
सर्वज्ञोऽसि महाप्राज्ञ! वाच्यतां यदि रोचते ॥ ९ ॥

श्रीभगवानुवाच

दानं स्नानं तपः श्राद्धं सदा शस्तं हि शोभने! ।
तथापि विधिना प्राप्तं तत्सर्वं चाक्षयं भवेत् ॥ १० ॥
देशे काले पर्वणि च तीर्थे चायतनेपदे । दानंस्नानंतपःश्राद्धं मुनिभिःपरिकीर्तितम्
पूर्णमास्याममावास्यांसङ्क्रान्तौग्रहणेतथा । वैधृतौचव्यतीपातेदानवृद्धिःपरास्मृता
गङ्गायां भास्करक्षेत्रे कुरुक्षेत्रे च पुष्करे । गोदावर्यां गयायांच तीर्थे चामरकण्टके
अवन्त्यां च हुतंदत्तं तत्सर्वं चाक्षयंभवेत् । तस्मात्सर्वप्रयत्नेन पर्वे तीर्थं समाचरेत्
कुचैलो दुर्भगो मूर्खो जडो रोग समन्वितः ।
तीर्थपर्वपरिभ्रष्टो नरो भवति निश्चितम् ॥ १५ ॥
के योगाः सुकृतानां च कर्तव्याश्च विशेषतः ॥ १६ ॥

श्रीकृष्ण उवाच

साधु पृष्टः प्रिये!प्रश्नःपुण्यकानांत्वयाऽनघे । मलमासेसमायाते ये नरा व्रतवर्जिताः
जन्मजन्मनि दारिद्र्यं तेषां भवति शोभने! ॥ १७ ॥

श्रीरुक्मिण्युवाच

कीदृशो हिमलोमासःकेनयोगेन जायते । कदा काले समायातिपतन्नोवदविस्तरात्

श्रीकृष्ण उवाच

युक्तमुक्तं त्वयादेवि प्रश्नः कालोयमीदृशः । देवतापितृकार्याणिविधिनाहिमलिम्लुचे
क्षौरं मौंजी विवाहश्चव्रतोपवासकंतथा । विशेषेण गृहस्थानां वर्ज्यं मुनिवरोत्तमैः
सम्वत्सरत्रयान्तेच मासोयमधिगच्छति । असंक्रमे रवेरस्मिस्तस्मादधिकमासकः
अधिमासाधिपत्योऽहं सदैव पुरुषोत्तमः । ममाभिधानं तीर्थं च महाकालवने शुभम्
पुरुषोत्तमाख्यं मे धाम सदैवात्र प्रतिष्ठति । तस्मात्सर्वप्रयत्नेन गन्तव्यंहित्वयासह

मिष्टान्नैर्नवभिश्चैव नैवेद्यैर्धूपदीपकैः। आच्छादनैश्च वस्त्रैश्च पीतकौशेयकैस्तथा
घण्टामृदङ्गनिह्रादैर्वीणाध्वनिसमन्वितैः। आरार्तिकं व्रती कुर्यात्कर्पूरागरुचन्दनैः॥
अलाभे तूलमुकैश्चापि फलस्यानन्त्यहेतवे। ताम्रपात्रस्थिते तोयेचन्दनाक्षतपुष्पकैः

अर्घ्यं दद्यात्सपत्नीकः प्रहृष्टेनान्तरात्मना।
पञ्चरत्नैः समायुक्तैर्जानुर्नीकृत्य भूतले॥
समादाय च पाणिभ्यां सर्वभक्तिसमन्वितः॥ ४३॥

अर्घ्यमन्त्रः

कृपावन्सर्वभूतेषु जगदानन्दकारक! । गृहाणार्घ्यमिमं देवसम्पूर्णफलदो भव॥

प्रार्थनामन्त्रः

स्वयम्भुवे नमस्तुभ्यं ब्रह्मणेऽमिततेजसे। नमोऽस्तु ते श्रियानन्दब्रह्मानन्द कृपाकर

एवं सम्प्रार्थ्य गोविन्दं पूजयेद् ब्राह्मान्स्वयम्।
सपत्नीकाञ्छुचीन्स्नाताल्लँक्ष्मीनारायणौ स्मरन्॥ ४६॥
पूजयित्वा विधानेन भोजयेद्घृतपायसैः॥ ४७॥
भोजयित्वा विधानेन सपत्नीकं यथोचितम्।
विद्याविनयसम्पन्नं तथा पत्न्या समन्वितम्॥ ४८॥
पूजयित्वा यथाशक्त्या वस्त्रालङ्कारकुङ्कुमैः।
गोस्तन्याम्रकपित्थैश्चखर्जूरैः कदलीफलैः॥ ४९॥

पनसैर्नारिकेलैश्च नारङ्गैर्दाडिमैस्तथा। घृतपक्वान्नगोधूमैः शुभैः सोमालिकैर्वटैः॥
शर्करावृतपूरैश्च कर्णिकैः खण्डमण्डकैः। उर्वारुकर्कटीशाकैः शृङ्गवेरैः समूलकैः॥

अन्यैश्च विविधैः शाकैरात्रैः पक्वैःपृथक् पृथक्।
भक्ष्यभोज्यलेह्यपेयकन्दकानि विशेषतः॥ ५२॥

सुवासितान्गोरसांश्च परिवेष्यमृदु ब्रुवन्। इदं स्वादुरसंभोज्यं भवदर्थेप्रकल्पितम्
याच्यतांरोचतेयच्चयन्मयापाचितंप्रभो।धन्योऽस्म्यनुगृहीतोस्मिकृतंसार्थंचमन्दिरम्
विसर्जयेत्ततो विप्रान्दत्त्वा ताम्बूलदक्षिणाः। चतुर्भिर्मिलितैर्दैर्घितारवलंम्ब्य ...

मिष्टान्नैर्नवभिश्चैव नैवेद्यैर्धूपदीपकैः। आच्छादनैश्च वस्त्रैश्च पीतकौशेयकैस्तथा
घण्टामृदङ्गनिह्रादैर्घोषध्वनिसमन्वितैः। आरार्तिकं व्रती कुर्यात्कर्पूरागरुचन्दनैः॥
अलाभे तूल्मुकैश्चापि फलस्यानन्त्यहेतवे। ताम्रपात्रस्थिते तोयेचन्दनाक्षतपुष्पकैः

अर्घ्यं दद्यात्सपत्नीकः प्रहृष्टेनान्तरात्मना।
पञ्चरत्नैः समायुक्तैर्जानुर्नीकृत्य भूतले॥
समादाय च पाणिभ्यां सर्वभक्तिसमन्वितः॥ ४३॥

अर्घ्यमन्त्रः

कृपावन्सर्वभूतेषु जगदानन्दकारक! । गृहाणार्घ्यमिमं देवसम्पूर्णफलदो भव॥

प्रार्थनामन्त्रः

स्वयम्भुवे नमस्तुभ्यं ब्रह्मणेऽमिततेजसे। नमोऽस्तु ते श्रियानन्दब्रह्मानन्द कृपाकर

एवं सम्प्रार्थ्य गोविन्दं पूजयेद् ब्राह्मान्स्वयम्।
सपत्नीकाञ्छुचीन्स्नाताल्लँक्ष्मीनारायणौ स्मरन्॥ ४६॥
पूजयित्वा विधानेन भोजयेद्घृतपायसैः॥ ४७॥
भोजयित्वा विधानेन सपत्नीकं यथोचितम्।
विद्याविनयसम्पन्नं तथा पत्न्या समन्वितम्॥ ४८॥
पूजयित्वा यथाशक्त्या वस्त्रालङ्कारकुङ्कुमैः।
गोस्तन्याम्रकपित्थैश्चखर्जूरैः कदलीफलैः॥ ४९॥

पनसैर्नारिकेलैश्च नारङ्गैर्दाडिमैस्तथा। घृतपक्वान्नगोधूमैः शुभैः सोमालिकैर्वरैः॥
शर्कराघृतपूरैश्च कर्णिकैः खण्डमण्डकैः। उर्वारुकर्कटीशाकैः शृङ्गवेरैः समूलकैः॥

अन्यैश्च विविधैः शाकैराम्रैः पक्वैःपृथक् पृथक्।
भक्ष्यभोज्यलेह्यपेयकन्दकानि विशेषतः॥ ५२॥

सुवासितान्गोरसांश्च परिवेष्यमृदु ब्रुवन्। इदं स्वादुरसंभोज्यं भवदर्थेप्रकल्पितम्
याच्यतांरोचतेयच्चयन्मयापाचितंप्रभो। धन्योऽस्म्यनुगृहीतोस्मिकृतंसार्थंचमन्दिरम्
विसर्जयेत्ततो विप्रान्दत्त्वा ताम्बूलदक्षिणाः। चतुर्भिर्मिलितैर्देवताम्बूलंमम वल्लभम

यो ददाति द्विजश्रेष्ठे स भवे सुभगो नरः । सुभगा च सदाचारा वल्लभा स्वजनेस
पुत्रसौभाग्ययुक्ता च ताम्बूलैर्जायते प्रिये । 
पत्रैस्तु केशवः प्रीत पूगैराश सहोमया ॥ ५७ ॥
चणकेनानल प्रीत खदिरेणतुमन्मथ । चतुर्भिर्विश्वरूपोऽसौ य पुष्णातिजगत्त्रयम्
परितोष्य सपत्नीकान्हस्ते दत्वा च मोदकान् ।
आसीमान्तमनुव्रज्य भुञ्जीत सह बन्धुभि ॥ ५९ ॥
अलङ्कारान्त व्रतं नारी या करोतीह सुप्रिये ।
दारिद्र्य पुत्रशोक च वैधव्य नाप्नुयात्कचित् ॥ ६० ॥
नरो वा यदि वा नारी य कुर्याच्च मलिम्लुचे ।
स नवसुखभोक्ता च भवेन्नात्र्यत्र संशय ॥ ६१ ॥
मलिम्लुचे प्राप्य न पूजितो यैर्नारायणोऽत्र परयैव भक्त्या ।
कथ भवेयु सुखपुत्रसम्प सुहृत् सुभार्या सुगुणैरुपेता ॥ ६२ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमे ऽवन्तीखण्डे ऽवन्तीक्षेत्रमाहात्म्ये पुरुषोत्तममाहात्म्ये दानादिमाहात्म्यवर्णनं नामैक सप्ततितमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्याय.

### अधिमासस्नानदानादिमाहात्म्यवर्णनम्

सनत्कुमार उवाच

अधिमास समासाद्ययोऽन्यत्रस्थितिमान्मन । कतोतिसनरोमूर्खो महाकालवनाद्बहि
अधिमासे नरो स्नात्वा तीर्थे पुरुषोत्तमाभिधे ।
स्नात्वा दत्त्वा च दानानि तेषां लोका सनातनाः ॥ २ ॥

पुरुषोत्तमं समभ्यर्च्य रमालालितपादकम् । तथैवच उमां देवीं शङ्करेण च पूजयेत्
वाञ्छितार्थशतं प्राप्य विष्णुलोके महीयते ।
भाद्रपदे सिते पक्षे एकादश्यां समाहितः ॥
उपोष्य विधिवद्व्यास! रात्रौ जागरणं चरेत् ॥ ४ ॥
विष्णोश्च पूजनं कार्यं जलयात्रातथैवच । पुरुषोत्तमसरेनित्यं तस्यपुण्यफलंश्रृणु
पुत्रदारधनं सम्यगायुरोग्यसम्पदः । न तेषां दुर्लभंकिञ्चित्त्रिषु लोकेषु विद्यते ॥
तस्य पूर्वतरे भागे जटेश्वरमहेश्वरः । तिष्ठति तापसस्तीरे यत्र राजा भगीरथः ॥
तपस्तप्त्वा परं लेभे पुण्यं पुण्यवतांवरः । गङ्गां भूतलमानीय सर्वलोकसुखाय वै
तस्य तीर्थे नरः स्नात्वा तिलधेनुं प्रदापयेत् ।
सर्वयज्ञफलं प्राप्य पुत्रवाञ्जायते नरः ॥ ६ ॥
तस्येशानतरे भागे रामो भार्गवसत्तमः । तपस्तेपे सुधर्मात्मा आत्मकायविशुद्धये
कौशिकी च सरिच्छ्रेष्ठा सर्वतीर्थवरप्रदा ।
तत्र स्नात्वा नरो जातिहत्यादोषविवर्जितः ॥ ११ ॥
रामेश्वरं समालोक्य धूतपापो भवेन्नरः ॥ १२ ॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डेऽवन्तीक्षेत्रमाहात्म्ये पुरुषोत्तमेश्वरमाहात्म्येऽधिमासस्नानदानादिमाहात्म्यवर्णनंनामद्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

# त्रिसप्ततितमोऽध्यायः

## गोमतीतीर्थकुण्डमाहात्म्यवर्णनम्

व्यास उवाच

गोमतीकुण्डं त्वया प्रोक्तं पुरा ब्रह्मन्सनातनम् ।
कस्मिन्काले कदा जातं तन्मे वद सुविस्तरात् ॥ १ ॥

सनत्कुमार उवाच

शृणुष्वमोमहाप्राज्ञकथापापहरापरम् । गोमतीकुण्डोद्भवापुण्यापुराक्रमेणमान्दितम्
नैमिषे च समासीनास्तपय शौनकादय । कथयन्तिकथापुण्यासर्वतीर्थोद्भवाशुभाम्
तस्मिन्नवसरे पुण्ये काशीमाहात्म्यमुत्तमम् । कथित नारदेनैव पवित्र पापहारकम्
ऊचर पुण्यपापानाधम्यावाराणसीपुरी । प्राप्य लभन्ते मोक्षश्च स्म चण्डालपण्डिता
धसीयदणयोमध्येपञ्चक्रोशी महाफलम् । अमरा मरणमिच्छन्तिकाकथाइतरजना
इति स्मृत्वा तदा व्यासं स्वयम्भू प्रत्यभाषत ।
शृण्वतां सर्वदेवानामृषीणां च परन्तप ॥ ७ ॥
नदी न गोमतीतुल्या कृष्णतुल्या न देवता । सर्वपातालभूमध्ये ■ द्वारकासमापुरी
इतितेनिश्चयमास्थायमुनय शौनकादय । यत्रतत्रस्थिता सर्वे प्रात सन्ध्यामुपासितुम्
तत्रैवगोमतीतीरेचकुस्नेवै धृतव्रता । सान्दीपनोऽपिऽतत्रैवप्रात सन्ध्यांसमाचरत्
एव बहुतिथे काले चरतस्तस्य वै व्रतम् ।
सान्दीपनस्य वै व्यास ह्यवन्तीपुरवासिन ॥ ११ ॥
तस्यैव कामपूर्त्यर्थं विद्यार्थिनौ रामजनार्दनौ ।
समायातौ सुकुमाराङ्गौ सतत ब्रह्मचारिणौ ॥ १२ ॥
निवास चक्रतुस्तस्य गुरोर्गेहे परन्तप । तस्य पाठयत सम्यग्विद्यां सर्वश्रुती परम्
दपस्युपसि तत्रैव दृश्यते ■ तदा गुरु । विद्योपदेशकालेऽय क गतो नौ गुरुर्वर

